# स्वाति तिरुनाळ् देवि नवरात्रि कीर्तनानि

## तोडयम्

*नाट रागः(मेळं ३६)   झम्प ताळः*

जय देवकीकिशोर जय कोटिस्मराकार
जय कालिन्दीतटविहार जय गोपिकाजार
जय जय ॥ १॥

जय मुरळीगानलोल जय सुवर्णरुचिचेल
जय सलीलधृतशैल जय वारिदनील
जय जय ॥ २॥

जय चरित्रधुतपाप जय खण्डितासुराटोप
जय यादवकुलदीप जय गोपालरूप
जय जय ॥ ३॥

जय कुटिलासितकेश जय मुनिमानसनिवेश
जय पङ्कजनाभाधीश जय भूमीरमेश
जय जय ॥ ४॥

◇◇◇◇◇

## मङ्गळम्

*पन्तुवराळी रागः (मेळं ५१)   आदि ताळः*

***पल्लवि***

मातङ्गतनयायै मङ्गळम्

***अनुपल्लवि***

भूयो मनसिजारिकन्तायै मङ्गळम्

***चरणं***

बहलकुङ्कुमपङ्कपातलितकुचायै महिषासुरहारिण्यै मङ्गळम् ॥ १॥

करिराजगमनायै वरतापसमञ्चयस्मरणीयचरणायै मङ्गळम् ॥ २॥

वरनदीतटगायै वनजनाभनुजायै मरकतमेचकाङ्ग्यै मङ्गळम् ॥ ३॥

◇◇◇◇◇

## गणेश गीतम्

*सावेरि रागः (मेळं १५)    आदि ताळः*

*पल्लवि*

परिपाहि गणाधिप भासुरमूर्ते

*अनुपल्लवि*

शरणागतभरण सामजोपमसुन्दरास्य

चरणं

हिमकिरणशकलशेखरतनुभव शमलनिवहशमन
कमलजमुखसुरवृन्दनुतचरित कामितपूरकपादसरोरुह ॥ १॥

मस्तकविगळितदानजलमिलितमधुकरसमुदाय
हस्तलसितनिजदन्त महितसुगुणाखुवह गुहसोदर निरुपम ॥ २॥

पावनपङ्कजनाभमनोहरभगिनेय देव
सेवकजनततिविद्यासमधिकश्रीसुखदायक भूरिकृपाकर ॥ ३॥

◇◇◇◇◇

## नवरात्रि कीर्तनं १

*शङ्कराभरण रागः (मेळं २९)    आदि ताळः (२ कळै)*

*पल्लवि*

देवि जगज्जननि देहि कृपया मम तावकचरणभक्तिम्

*अनुपल्लवि*

देवमकुटमणिदेदीप्यमानपादे केवलानन्दपूर्णे कीरसुवाणि वाणि

*चरणं*

वीणापुस्तकरञ्जितकरतलविहसितकुञ्जवरेऽम्बिके
वेणीमञ्जिमपुञ्जविनिर्जितविततघनाघनमालिके
एणीमदविनिवारणनिपुणतरेक्शणहृतनतपातके
शाणोल्लीढमहामणिभूषणशालिनि बुधजनपालिके
प्रीणितमुनिगेये द्रुहिणजाये परममेये निरपाये ॥ १॥

सकलकलालयशारदहिमकरसदृशविलासयुतानने

मकरवराङ्कशरासनमौर्विमहिततराळकमोहने
शुकसनकादिमुनीश्वरविरचितसुन्दरपदयुगपूजने
विकतजटालसितेन्दुकलापिनि विमलसरोजवरासने
विकचकमलपादे विहतभेदे निहतखेदे भृतमोदे ॥ २॥

ज्योतिर्मयनवहारायितसज्ज्योतिषतन्त्रविभूषिते
मातर्मेदुरमीमांसागममांसिळितोरुयुगाञ्चिते
चेतोहरतरशब्दागमकाञ्चीलतिकागुणशोभिते
पातकहरपाद्माादिपुराणपादितपाणिविराजिते
वीतशमलहृद्ये कलितविद्ये त्रिजगदाद्ये निरवद्ये ॥ ३॥

अरुणतराधरपरिलसदतिमृदुहसितद्युतिपटलोज्ज्वले
शरणसमागतजनपरिपालनसततोद्यतकरुणाकुले
परिजनविरचितनवरात्रोत्सवपरितोषितहृदयेऽमले
कुरु करुणामयि भजनपरे मयि कुन्दमुकुळरदने तुले
भूरिशुभकराणि अघहराणी नुतिपराणि करवाणि ॥ ४॥

◇◇◇◇◇

# नवरात्रि कीर्तनं २

*कल्याणि रागः (मेळं ६५)   आदि ताळः (२ कळै)*

*पल्लवि*

पाहि मां श्रीवागीश्वरि पाहि भुवनेश्वरि

*अनुपल्लवि*

देहि तावकदयामयि भारति देहि बोधसुखदायिकामिह
मोहभारतिमिरसञ्चयामृतमूर्त्तिमिमलबुधलोकविलसित-
मोहनीयकटकाङ्गदभूषितमुग्धगात्रि तुहिनांशुवतंसिनि
बाहुलालसितपुस्तकजपवटबन्धुराभयवरे परचिन्मयि

*चरणं*

शारदे कचपाशविडंबितरुचिरतरासितनीरदे
निजपतीकमलजनिरुपमतरसुखकरणविशारदे
स्फुटतरधवळमविलसितमुकुरशकलपटलीरदे विनुतनारदे
दारुणाधिकरपातकावळिदारणैकनिरते सुभाषिणि

सारसगर्भदळायतलोचनपूरितभक्तमनोरथवल्लरी
वारणकुंभमदापहकुचयुगभारविनम्रकृशोदरि मामक-
करपदमुखसमकरणनिकरमपि चरणयुगभजनपरमिह कुरु तव ॥ १॥

श्यामले बहळागरुचन्दनमृगमदघुसृणपरिमळे
परिहृतपदनतपरिजनसमुदयनिखिलमनोमले
शतमुखमुखसुरवरपरिणुतबहुविधचरितेऽमले मधुरकोमले
सामजाधिपमराळिकागतिचारुमन्दगमने सुहासिनि
मामकमानसतापसमूहविराममतीव विधातुमये पद-
तामरसद्वयमनुकलये हृदि तामसदोष विलासिनि रासिनि
समुदयदविकलहिमकररुचिमदशमनकरणपटुविमलहसितमुखि ॥ २॥

भासिते शुकशौनककौशिकमुखमुनिपरिषदुपासिते
सहृदयरसकरकविवरनिकर हृदयकमलासिते
श्रुतियुगपथपथिकनयन परिलसदरुणसितासिते कुसुमवासिते
भासमाननवरात्रिकोत्सवभावुकोपचितिमोदशालिनि
भासुरसारसनाञ्चितरत्नविलासितविशेषविनिर्जितशक्रश
रासरुचे सकलागमरूपिणि दासमिमं कृपया शिशिरीकुरु
वस मम सुखमधिरसनमनवरतं असदृशविलसितविसरमयि जननि ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ३

*सावेरी रागः (मेळं १५)    आदि ताळः (२ कळै)*

*पल्लवि*

देवि पावने सेवे चरणे ते बुधावने

*अनुपल्लवि*

भावुकदायिकटाक्शविलासिनि भारति देहि सदा कुशलं भुवनेश्वरि

*चरणं*

सोमबिम्बमदहरसुमुखि भक्तजनाखिल् कामितदाननिरते कान्त कुन्ददन्ति
भीमानन्ताज्ञानतिमिरभेदनमिहिरायिते मामक हृदि विहर मान्यगुणावासे
सामजपुङ्गवचारुगते सुरसाध्यनुते विमले वरदे भुवनेश्वरि ॥ १॥

वारिदनिभचिकुरे वासवोपलनयने मारशरासनरुचिचोरचिल्लिकान्ते
सारसकृतनिलये जाम्बुनदमयभूषे नारदादिमुनिनुतनामसमुदाये

भूरिमनोज्ञकराञ्चितवीणापुस्तकभासिनि चारुहासे भुवनेश्वरि ॥ २॥

पातितदितिसुते श्रीपद्मनाभविलासिनि वीतपापजनगेयविभवे विद्यारूपे
चातको जलदमिव सादरमाश्रयामि त्वां प्रीतिं मयि कुरु लोकमातरयि नित्यं
धूतमलं कुरु मां सदये परिपोषितसूरिगुणे शुभदे भुवनेस्वरि ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ४

*तोडी रागः (मेळं ८)   आदि ताळः (२ कळै)*

*पल्लवि*

भारति मामव कृपया नतजनार्त्तिभारहरणनिरतया

*अनुपल्लवि*

शारदविधुमण्डलसदृशमनोहरमुखि

*चरणं*

वासवादिसुरविनुते तरणिसतभासुरभूषणलसिते
हासजितकुन्दवितते विमलमुक्ताहारकण्ठि गजेन्द्रगते
दासभूतजनविद्यादानलोले परदेवि
भासुरचन्दनमृगमद कुसुम सुवासितगात्रि सुपावनशीले ॥ १॥

नारदादिमनोनिलये भुवनत्रयनायिके कृताज्ञानिलये
चारुबाहुधृतवलये विकचसारसाक्षि तोषितभूवलये
मारकार्मुखसुषमाचोरचिल्लियुगे वाणी
वारिजभवदयिते वरवीणावादनलोलकराङ्गुलिजाले ॥ २॥

सकलागममयरूपे निखिललोकजननि सुधामधुरालापे
अकलङ्कगुणकलापे करुणारसहतविवशजनविलापे
सकले पद्मनाभसरसिजसेवकवर-
शुकसनकादिमुनीश्वरविनुते सोमकलासदृशामलफाले ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ५

*भैरवी रागः (मेळं २०)    चापु ताळः*

*पल्लवि*

जननी मामवामेये भारति जय सरसिजासनजाये

*अनुपल्लवि*

अनुपमितकमलावासे चारुहसित कृतकन्दनिरासे देवि
मुनिवरेडितविमलचरिते मोहनीयगुणौघभरिते

*चरणं*

तरुणवारिदनिभवेणि देवतरुकिसलयोपमपाणि
कलितवरदाभीतिमुद्रे कल्याणि पूर्णशरदिन्दुसमकान्ते वाणी
सुरुचिरनयनजितैणि परमकरुणारसशिशिरवेणि
चरणगतजनभरणनिपुणे परमामृतमधुरभाषिणि ॥ १॥

घनसारतिलकाङ्कितफाले अतिकमनीयविशदद्कुले विनत-
जनविद्यावितरणलोले साधुस्मरणीयतमपादमूले
कनकभूषणे शुभशीले सर्वागममयि सुजनानुकूले
नानामुनिमनोमयवनजनिलये विनिहताश्रितविविधशमले ॥ २॥

परिहृतघनाज्ञानखेदे कृतपद्मनाभसेवकमोदे
सततपरिचितवीणानिनादे मम कुरु मतिमयि तव पादे
सुरगणमहितविनोदे शीतकरपोतधरे
सदा सरसीरुहमुखि सपदि वदने सरसमिह वस सकलवरदे ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ६

*पन्तुवराळी रागः (मेळं ५१)    आदि ताळः*

*पल्लवि*

सरोरुहासनजाये भवति सामोदमम्ब नमामि

*अनुपल्लवि*

पुरन्दरादिसुरोत्तमसुरुचिरकिरीटमणिकिरणाञ्चित चरणे

*चरणं*

यामिनीशमनोज्ञतमरुचिभ्रममदविनिवारणपटुसित
तामरसमृदुकोटरवासिनि सामजराजसदृशगमने
काममञ्जुशरासननिरुपमकान्तिहरचिल्लिचलननिहत-
भीमनिबिडाज्ञानमले सुललामशोभिफालतले वर-
हेमचारुभूषणलसिते मदहीनमौनिहृदयैकपदे सुर-
भामिनीनिवहगीतगुणे शशिधाममन्दहसिते जय भगवति ॥ १॥

मङ्गळावरशालिवीणासङ्गिकरमृदुलाङ्गुळिदलजित-
तुङ्गकल्पककिसलयनिवहे दुरितसेवकतापभरे
भृङ्गसञ्चयवलयितसुमसुरभीकृतधम्मिल्लर चितमद-
भङ्गसजलाम्भोदकुले नवपङ्कजोपम नयनयुगे लस-
दङ्गरागघनसारहरिणमदहारभासि कुचकुंभयुगे हरि-
पुङ्गवोपमितमध्यतले परबोधरूपिणि परे जगदीश्वरि ॥ २॥

बालचन्द्रवतंसिनि परिजनपालनैकपरे घनपातक-
शैलभिधुरायितचरिते करुणालवालायितहृदये
लोलरुचिराळकपरिवृतसुविशालनिटिलायितवदने
नालमिह फणिनायकोपि बतालपितुमयि महिमानं ते
न्तूलतां नय ममोद्यदविद्याजालमाशु ननु भारति सकलं
फाललोचनमुखाखिलवन्दितपद्मनाभ पदसेवकनिरते ॥ ३॥

◇◇◇◇◇

## नवरात्रि कीर्तनं ७

*शुद्धसावेरी रागः (मेळं २९)    चापु ताळः*

*पल्लवि*

जननि पाहि सदा जगदीशे देवि सुरहरवल्लभे

*अनुपल्लवि*

अनवद्यतरनवहारालंकृते मञ्जु- वनजायतलोचने वाहिनीतटवासे

*चरणं*

शैलराजतनये चण्डमुण्डनाशिनि शूलशोभितकरे सुन्दररूपे
फालराजितिलके परमकृपावति
पालितसुजनमालिके सुरसालकिसलय चारुनिजपादे ॥ १॥

महितबाहुबलमहिषासुरादिगहनदहनायिते गतमदसेव्ये
सुहसितजितकुन्दे शोणजपाधरि
विहर मम हृदि विधुसदृशमुखि बहळमलयजबन्धुरे लोक- ॥ २॥
परमपावन श्री पद्मनाभसहोदरि नीलचिकुरे केसरिवरवाहे
चरितदुरितभक्तदरनिकरे गौरि
कुरु कृपां मयि कलिशधरमुखपरिणुते घनदुरितहृतिलोले ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ८

*नाट्टकुरञ्जी रागः (मेळं २८)    चापु ताळः*

*पल्लवि*

पाहि जननि सन्ततं मामिहामलपरिणतविधुवदने

*अनुपल्लवि*

देवि सकलशुभदे हिमाचलकन्ये साहसिकदारुण चण्डमुण्डनाशिनि

*चरणं*

बालसोमधारिणी परमकृपावति नीलवारिदनिभनेत्रे रुचिरशीले
फाललसितवरपाटीरतिलके श्रीनीलकण्ठदयिते निगमवनमातङ्गि ॥ १॥
सुरभिकुसुमराजिशोबितकचबृन्दे वरदे वासवमुखवन्द्यमानचरणे
अरुणजपाकुसुमाधरे कौमुदिपरमोज्ज्वलहसिते भक्तकल्पलतिके ॥ २॥
कमनीयतमरूपे कन्याकुब्जवासिनि शमितपापनिकरे शान्तहृदयगेहे
अमितविमलरुचिहारे नील वारिदोपमवेणि श्रीपद्मनाभसोदरि ॥ ३॥

◇◇◇◇◇

# नवरात्रि कीर्तनं ९

*आरभी रागः (मेळं २९)    आदि ताळः (१ कलै)*

*पल्लवि*

पाहि पर्वतनन्दिनि मामयि पार्वणेन्दुसमवदने

*अनुपल्लवि*

वाहिनीतटनिवासिनि केसरिवाहने दितिजाळिविदारणे

*चरणं*

जंभवैरिमुखनते करिकुम्भपीवरकुचविनते वर-
शंभुललाटविलोचनपावकसम्भवे समधिकगुणवसते ॥ १॥

कञ्जदळनिभलोचने मधुमञ्जुतरमृदुभाषणे मद-
कुञ्जरनायकमृदुगतिमञ्जिमभञ्जनातिचणमन्थरगमने ॥ २॥

चञ्चदळिललिताळके तिलकाञ्चितशशिधरकलाळिके नत-
वञ्चिनृपालकवंशशुभोधयसञ्चयैककृतिसततगुणनिके ॥ ३॥

◇◇◇◇◇

## मङ्गळम्

*यदुकुलकाम्भोजि रागः (मेळं २८)    रूपक ताळः*

भुजगशायिनो नाम मङ्गळं परमजानतापीह कीर्तितम् ।
दहति पाप्मनां जालमञ्जसा भुवि शिखी यथा दारु सञ्चयम् ॥